**NARAYANA GUROH**
**SAMSKRITA KRITAYAH**

(The Sanskrit Works of Narayana Guru

*Published by* :

Narayana Gurukula
Srinivasapuram P. O.
Varkala, Kerala, India-695145

*Printed at* :

Jyoti Printers, Chathari, Tripunithura
Phone : 8-777060

First Gurukula Edition : 1993

# INTRODUCTION

A true Guru is an awakener. He arouses people from their phenomenal ignorance. An Indian ritualistic symbol of the rousing a diety the priest is to ring the bell and wave the light of camphor which is called *ārati*. The ringing of the bell calls attention and the light turns attention to the object of reverence When a Guru writes a hymn or a praise, the sound of it is like blowing a horn or bugle or making a clarion call with a conch or sounding a percussion such as of a kettle-drum. What is sung, chanted or recited can also be seen with one's eyes and one can announce his recognition of it in the words of his language. That is like highlighting the imperishable sound. Narayana Guru was such an awakener.

The Guru acted both as a revealer and an awakener. He revealed to his votaries that one can express wisdom and learn wisdom in one's own language. So he has written a number of hymns in his native mother tongue, Malayalam. He also revealed to us that the parochial, secretive aspect of a closed language can be substituted with a language spoken by a great majority of people or a language which has the status of a universally accepted word-medium of great classics, such as Sanskrit (Samskṛtam). The Guru wrote several philosophically significant and emotionally rich hymns with great lyrical quality in Sanskrit language which can be used for the erudition of scholarly people and the spiritual upliftment of the devotionally minded. This is the special significance of his several works in Samskṛtam. He also rendered in simple Malayalam

what was lying hidden in the Sanskrit scriptures such as the *Īśa Upanishad*, and also in a subtle way he has given the gist of the most voluminous of all Upanishads- The *Bṛhadāraṇyaka Upanishad* in his One Hundred Verses of Self-Instruction (*Ātmopadeśa Śatakam*). The Universal Prayer (*Daivadaśakam*) of ten verses is a masterpiece epitomizing the essential teachings of the Upanishads. Like an architect of great precision, he built bridges between languages like Malayalam and Sanskrit, so that one could go from Malayalam to Sanskrit and vice versa.

When great philosophers speak in terms of fraternity, Narayana Guru speaks of the need for the unity of neighbourhood. Just as Jesus said, "Love thy neighbour as thyself". Narayana Guru also exhorts, to care-for one's neighbour. Guru's neighbours were the Śaivite Nāyanārs and Vaiṣnavite singers of word wisdom -Ālvārs He had a good recourse to the *Tevāram* and also the *Nālāyiraprabandham* of the Ālvārs. Both Nāyanārs and Ālvārs sung their song-effusions in the Tamil language. To show his great reverence to the mother of Indian languages, he himself wrote the *Tevāra patikangaḷ* in Tamil and translated from Tamil the sacred *Kuṛaḷ* of Saint Tiruvalluvar This again shows his literary craftsmanship to put bridges between languages of neighbourhood.

Like the lighted lamp that is put under a bushel, the Sanskrit and Tamil works of Narayana Guru still remain unread and unrecognized because of the secretive

use of language barrier mainly of the script in which they were written. Both the Malayalam and Tamil works were printed only in the script of the Malayalam language Now we are bringing out all the Sanskrit works of Narayana Guru, printed in the Devanāgari script, so that all those who know Sanskrit in India and abroad can read the original works of the Guru in that sacred language. Hope this will bring rejoicings in all.

Those who were hither to far from the Guru, can now come closer to him because the original character in which a work was written is hereby restored from the obscurity of transcriptions in vernaculars. Such a publication is sure to meet with the approbation of all wisdom lovers. Welcome to the works of Narayana Guru's sacred writings in Sanskrit.

Fernhill,
12-12-1992 GURU NITYA CHAITANYA YATI

# परिचायकम्

सर्वतन्त्र स्वतन्त्रस्य नारायण गुरोः संस्कृतसूक्तीनां नागरलिप्या मुद्रितं समाहार रूपं प्रसाधनं नारायण गुरुकुल-प्रवर्तकैः प्रकाश्यत इति वयं नितरां सन्तुष्यामः । विषय वैचित्र्येण प्रतिपादन सौकुमार्येण भावगांभीर्येण च संपन्ना एताः कृतयः परिशीलकानां सुधियामविद्यानिरसनपूर्वकमध्यात्मविज्ञानं समुज्ज्वलं विधातुं बाढं प्रभवन्ति । प्रतिपत्तॄणामधिकार-भेदमनुरुन्धानेन गुरुणा कृतीनां रूपवैविध्यं समाकलितं दरी दृश्यते । अथाप्यद्वैतदर्शनसिद्धान्तान्न क्वापि प्रतिपादनं व्यत्येति ।

आसु कृतिषु दर्शनमालैव परिमाणेन सारवत्तया च प्राधान्यमर्हति । अध्यारोपादीनि निर्वाणपर्यन्तानि दशदर्शनानि प्रत्येकं दशभिः पद्यैरुपनिबद्धानि । निर्धारितानां विषयाणां विवेचने समर्थानामुपपत्तीनां प्रदर्शने सान्निष्ठानां निगमनानां व्यवस्थापने च गुरोर्नैपुणी सर्वातिशायिनी वरीवर्ति ।

ब्रह्मविद्यापञ्चकं नाम कृतिर्ब्रह्मविद्याया मनोज्ञं स्वरूपं साकल्येनावतारयति । मुनिचर्यापञ्चकन्तु जीवन्मुक्तस्य महात्मनो भावपौष्कल्यमाविष्करोति ।

गुरोः संस्कृतकृतिषु स्तोत्ररूपाणि निबन्धनानि शब्दार्थ-चमत्कारसमृद्ध्या भक्तिभावमहिम्ना च समुल्लसितानि सुतरां श्रद्धेयानि भवन्ति ।

नारायणगुरो रृपित्वमुद्भावयन् होममन्त्रो हवनस्य ज्ञानात्मकतामभिव्यञ्जयति ।

वेदान्तसूत्रं नाम कृतिरौपनिषदं ब्रह्मणो जगत्कारणत्वमात्मनः सजातीय विजातीय स्वगतभेदाभावञ्च सामंजस्येन प्रतिपादयन्ती नारायणगुरोर्ब्रह्मसूत्रकारेण बादरायणेन सदृक्षतामावेदयति ।

एवमन्या अपि कृतयोऽत्र समाहृता मननोपयोगिन्यः श्रद्धालूनां समादरमर्हन्ति ।

अस्य प्रसाधनस्य प्रचुरं प्रचारं सुमहतीं प्रतिष्ठाञ्चाशासानः परिचायकमिदं गुरुप्रणामपुरस्सरं समर्पयामि ।

इति विधेयः
एम्. हरिहर शास्त्री

गीतानिलयम्
करमना पी. ओ.
तिरुवनन्तपुरम्
२०–१–१९९३

# विषयानुक्रमणी


| | | |
|---|---|---|
| 1. | विनायकाष्टकम् | 1 |
| 2. | श्रीवासुदेवाष्टकम् | 3 |
| 3. | गुहाष्टकम् | 5 |
| 4. | बाहुलेयाष्टकम् | 7 |
| 5. | भद्रकाल्यष्टकम् | 10 |
| 6. | चिदम्बराष्टकम् | 14 |
| 7. | षाण्मातुरस्तवम् | 16 |
| 8. | विष्ण्वष्टकम् | 20 |
| 9. | ब्रह्मविद्यापञ्चकम् | 22 |
| 10. | मुनिचर्यापञ्चकम् | 24 |
| 11. | जातिनिर्णयम् | 25 |
| 12. | आश्रमम् | 26 |
| 13. | निर्वृतिपञ्चकम् | 27 |
| 14. | श्लोकत्रयी | 28 |
| 15. | दर्शनमाला | 29 |
| 16. | होममंत्रः | 49 |
| 17. | समाधि श्लोकौ | 50 |
| 18. | नवमञ्जरिकाया अवतरणिका | 50 |
| 19. | वेदान्तसूत्रम् | 51 |


□

# 1. विनायकाष्टकम्

नमद्देववृन्दं लसद्वेदकन्दं
शिरःश्रीमदिन्दुं श्रितश्रीमुकुन्दम् ।
बृहच्चारुतुन्दं स्तुतश्रीसनन्दं
जटाहीन्द्रकुन्दं भजेऽभीष्टसन्दम् ॥ (१)

किलद्देवगोत्रं कनद्धेमगात्रं
सदानन्दमात्रं महाभक्तमित्रम् ।
शरच्चन्द्रवक्त्रं त्रयीपूतपात्रं
समस्तार्तिदात्रं भजे शक्तिपुत्रम् ॥ (२)

गलद्दानमालं चलद्भोगिमालं
गलाम्भोदकालं सदा दानशीलम् ।
सुरारातिकालं महेशात्मबालं
लसत्पुण्ड्रफालं भजे लोकमूलम् ॥ (३)

उरस्तारहारं शरच्चन्द्रहीरं
सुरश्रीविचारं हृतार्तारिभारम् ।
कटे दानपूरं जटाभोगिपूरं
कलाबिन्दुतारं भजे शैववीरम् ॥ (४)

कराऽऽरूढमोक्षं विपद्भङ्गदक्षं
चलत्सारसाक्षं पराशक्तिपक्षम् ।
श्रितामर्त्यवृक्षं सुरारिद्रुतक्षं
परानन्दपक्षं भजे श्रीशिवाक्षम् ॥ (५)

सदाशं सुरेशं सदा पातुमीशं
निदानोद्भवं शाङ्करप्रेमकोशम् ।
धृतश्रीनिशेशं लसद्दन्तकोशं
चलच्छूलपाशं भजे कृत्तपाशम् ॥ (६)

ततानेकसन्तं सदा दानवन्तं
बुधश्रीकरन्तं गजास्यं विभान्तम् ।
करात्मीयदन्तं त्रिलोकैकवृन्तं ।
सुमन्दं परन्तं भजेऽहं भवन्तम् ॥ (७)

शिवप्रेमपिण्डं परं स्वर्णवर्णं
लसद्दन्तखण्डं सदानन्दपूर्णम् ।
त्रिवर्णप्रभास्यं धृतस्वर्णभाण्डं
चलच्चारुशुण्डं भजे दन्तितुण्डम् ॥ (८)

---

## 2. श्रीवासुदेवाष्टकम्

श्रीवासुदेव, सरसीरुहपाञ्चजन्य-
कौमोदकीभयनिवारणचक्रपाणे,
श्रीवत्सवत्स, सकलामयमूलनाशिन्,
श्रीभूपते, हर हरे, सकलामयं मे ॥ (१)

गोविन्द, गोपसुत, गोगणपाललोल,
गोपीजनाङ्गकमनीयनिजाङ्गसङ्ग,
गोदेविवल्लभ, महेश्वरमुख्यवन्द्य,
श्रीभूपते, हर हरे, सकलामयं मे ॥ (२)

नीलालिकेशपरिभूषितबर्हिबर्ह,
कालाम्बुदद्युतिकलायकलेबराभ,
वीर, स्वभक्तजनवत्सल, नीरजाक्ष,
श्रीभूपते, हर हरे, सकलामयं मे ॥ (३)

आनन्दरूप, जनकानकपूर्वदुन्दु-
भ्यानन्दसागरसुधाकरसौकुमार्य,
मानापमानसममानसराजहंस,
श्रीभूपते, हर हरे, सकलामयं मे ॥ (४)

मञ्जीरमञ्जुमणिशिञ्जितपादपद्म,
कञ्जायताक्ष, करुणाकर, कञ्जनाभ,
सञ्जीवनौषधसुधामय, साधुरम्य,
श्रीभूपते, हर हरे, सकलामयं मे ॥ (५)

कंसासुरद्विरदकेसरिवीर, घोर-
वैराकरामयविरोधकराज, शौरे,
हंसादिरम्यसरसीरुहपादमूल,
श्रीभूपते, हर हरे, सकलामयं मे ॥ (६)

संसारसङ्कटविशङ्कटकङ्कटाय
सर्वार्थदाय सदयाय सनातनाय
सच्चिन्मयाय भवते सततं नमोऽस्तु
श्रीभूपते, हर हरे, सकलामयं मे ॥ (७)

भक्तप्रियाय भवशोकविनाशनाय
मुक्तिप्रदाय मुनिवृन्दनिषेविताय
नक्तन्दिवं भगवते नतिरस्मदीया
श्रीभूपते, हर हरे, सकलामयं मे ॥ (८)

---

# 3. गुहाष्टकम्

शान्तं शम्भुतनूजं सत्यमनाधारं जगदाधारं
ज्ञातृज्ञाननिरन्तरलोकगुणातीतं गुरुणातीतम् ।
वल्लीवत्सलभृङ्गारण्यकतारुण्यं वरकारुण्यं
सेनासारमुदारं प्रणमत देवेशं गुहमावेशम् ॥ (१)

विष्णुब्रह्मसमर्च्यं भक्तजनादित्यं वरुणातिथ्यं
भावाभावजगत्त्रयरूपमथारूपं जितसारूपम् ।
नानाभुवनसमाधेयं विनुताधेयं वराधेयं
केयूराङ्गनिषङ्गं प्रणमत देवेशं गुहमावेशम् ॥ (२)

स्कन्दं कुङ्कुमवर्णं स्पन्दमुदानन्दं परमानन्दं
ज्योतिः स्तोमनिरन्तररम्यमहस्साम्यं मनसायाम्यम् ।
मायाशृङ्खलबन्धविहीनमनादीनं परमादीनं
शोकापेतमुदात्तं प्रणमत देवेशं गुहमावेशम् ॥ (३)

व्यालव्यावृतभूषं भस्मसमालेपं भुवनालेपं
ज्योतिश्चक्रसमर्पितकायमनाकायव्ययमाकायम् ।
भक्तत्राणनशक्त्या युक्तमनुद्युक्तं प्रणयासक्तं
सुब्रह्मण्यमरण्यं प्रणमत देवेशं गुहमावेशम् ॥ (४)

श्रीमत्सुन्दरकायं शिष्टजनासेव्यं सुजटासेव्यं
सेवातुष्टसमर्पितसूत्रमहासत्रं निजषड्वक्त्रम् ।
प्रत्यत्थ्र्यानतपादसरोरुहमावाहं भवभीदाहं
नानायोनिमयोनिं प्रणमत देवेशं गुहमावेशम् ॥ (५)

मान्यं मुनिभिरमान्यं मञ्जुजटासर्पं जितकन्दर्पं
आकल्पामृततरलतरङ्गमनासङ्गं सकलासङ्गम् ।
भासा ह्यधरितभास्वन्तं भविकस्वान्तं जितभीस्वान्तं
कामं कामनिकामं प्रणमत देवेशं गुहमाबेशम् ॥ (६)

शिष्टं शिवजनतुष्टं बुधहृदयाकृष्टं हृतपापिष्ठं
नादान्तद्युतिमेकमनेकमनासङ्गं सकलासङ्गम् ।
दानविनिर्जितनिर्जरदारुमहाभीरुं तिमिराभीरुं
कालाकालमकालं प्रणमत देवेशं गुहमावेशम् ॥ (७)

नित्यं नियमिहृदिस्थं सत्यमनागारं भुवनागारं
बन्धूकारुणललितशरीरमुरोहारं महिमाहारम् ।
कौमारीकरपीडितपादपयोजातं दिवि भूजातं
कण्ठेकालमकालं प्रणमत देवेशं गुहमावेशम् ॥ (८)

---

# 4. बाहुलेयाष्टकम्

ओं ओं ओं होमधूमप्रकटतटजटा-
कोटिभोगिप्रपूरम्
आं आं आं आदितेय प्रणतपदयुगां-
भोरुहश्रीविलासम्
ऊं ऊ ऊं उग्रनेत्रत्रयलसितवपु-
र्ज्योतिरानन्दरूपं
श्रीं श्रीं श्रीं शीघ्रचित्तभ्रमहरमनिशं
भावये बाहुलेयम् ॥ (१)

ह्लीं ह्लीं ह्लीं हृष्टषट्कन्धरमघमरणा-
रण्यसंवर्तवह्निं
ऐं ऐं ऐं ऐङ्गुदीसत्फलमृदुमिलित-
प्राशियोगीन्द्रवन्द्यम्
क्लीं क्लीं क्लीं क्लिष्टकायक्लमदवदहन-
क्लेशनिर्म्मूलनाशं
सौं सौं सौं सौरकान्तिभ्रमहरमनिशं
भावये बाहुलेयम् ॥ (२)

शं शं शं शब्दरूपं शशिधरममलं
शङ्करं साम्बमूर्तिं
शिं शिं शिं शिष्टवन्द्यं शिखरिनिलयनं
शिक्षितानेकलोकम्

शं शं शं शुभ्रहासं शुभकरमतिस—
न्देहसन्दोहनाशं
शौं शौं शौं शौविलताङ्गं सितभसितगणै-
र्भावये बाहुलेयम् ॥ (३)

रं रं रं रम्यदेहं रजतगिरिगृहं
रक्तपद्माङ्घ्रियुग्मं
रिं रिं रिं रिक्तशोकप्रकृतिपरम-
जंघालमानीलनेत्रम्
रुं रुं रुं रूक्षकायप्रतिभटहननं
रक्तकौशेयवस्त्रं
रौं रौं रौं रौरवादिद्रुतहरकुहरं
भावये बाहुलेयम् ॥ (४)

हं हं हं हंसयोगिप्रवरसुखकरं
हस्तलक्ष्मीसमेतं
हिं हिं हिं हीनमानं हितमुखवरदं
हिंसयापेनकीलम्
हुं हुं हुं हुंकृतिध्वंसितरजनिचर-
क्रौर्यकौटिल्यमूर्ति
हैं हैं हैं हैमकुम्भायतकरसहजं
भावये बाहुलेयम् ॥ (५)

णं णं णं नन्दिकेशप्रवरभुजगनि-
र्विघ्नकर्मप्रपञ्चं
णिं णिं णिं नीलकण्ठप्रियसुतमजितं
निर्मलाङ्गं निरीहम्

णुं णुं णुं णुत्तनाभोत्तरनिभृतनिरा-
लम्बकैवल्यमूर्ति
णौं णौं णौं नामरूपात्मकजगदखिलं
भावये बाहुलेयम् ॥ (६)

भं भं भं भागधेयं भगवदनुचर-
प्राञ्जलिस्तोत्रपूरं
भिं भिं भिं भीमनादान्तकमदनहरं
भीपितारातिवर्गम् ।
भुं भुं भुं भूतिभूषार्चितममितसम-
स्तार्थशास्त्रान्तरङ्गं
भौं भौं भौं भौममुख्यं ग्रहगणनपटुं
भावये बाहुलेयम् ॥ (७)

वं वं वं वाहिनीशं वलरिपुनिलय-
स्तोत्रसम्पत् समूहं
विं विं विं वीरबाहुप्रभृतिसहचरं
विघ्नराजानुजातम् ।
वुं वुं वुं भूतनाथं भुवननिलयनं
भूरिकल्याणशीलं
वौं वौं वौं भावितारिप्रतिभयमनिशं
भावये बाहुलेयम् ॥ (८)

---

## 5. भद्रकाल्यष्टकम्

श्रीमच्छङ्करपाणिपल्लवकिर-
ल्लोलंबमालोल्लस-
न्मालालोलकलापकालकबरी-
भारावलीभासुरीम्
कारुण्यामृतवारिराशिलहरी-
पीयूषवर्षावलीं
बालाम्बां ललितालकामनुदिनं
श्रीभद्रकालीं भजे ॥ (१)

हेलादारितदारिकासुरशिरः
श्रीवीरपाणोन्मद-
श्रेणीशोणितशोणिमाधरपुटीं
वीटीरसास्वादिनीम्
पाटीरादिसुगन्धिचूचुकतटीं
शाटीकुटीरस्तनीं-
घोटीवृन्दसमानधाटियुयुधीं
श्रीभद्रकालीं भजे ॥ (२)

बालार्कायुतकोटिभासुरकिरी-
टामुक्तमुग्धालक-
श्रेणीनिन्दितवासिकामरुसरो-
जाकाञ्चलोरुश्रियम्
वीणावादनकौशलाशयशय-
श्र्यानन्दसन्दायिनी-
मंबामंबुजलोचनामनुदिनं
श्रीभद्रकालीं भजे ॥ (३)

मातङ्गश्रुतिभूषिणीं मधुधरी-
वाणीसुधामोषिणीं
भ्रूविक्षेपकटाक्षवीक्षणविस-
र्गक्षेमसंहारिणीम्
मातङ्गीं महिषासुरप्रमथिनीं
माधुर्यधुर्याकर-
श्रीकारोत्तरपाणिपङ्कजपुटीं
श्रीभद्रकालीं भजे ॥ (४)

मातङ्गाननबाहुलेयजननीं
मातङ्गसंगामिनीं
चेतोहारितनुच्छवीं शफरिका-
चक्षुष्मतीमम्बिकाम्

जृंभत्प्रौढनिसुंभसुंभमथिनी-
मंभोजभूपूजितां
संपत्सन्ततिदायिनीं हृदि सदा
श्रीभद्रकालीं भजे ।। (५)

आनन्दैकतरङ्गिणीममलहृ-
न्नालीकहंसीमणीं
पीनोत्तुङ्गघनस्तनां घनलसत्-
पाटीरपङ्कोज्वलाम्
क्षौमावीतनितंबबिंबरशना-
स्यूतक्वणत् किङ्किणी-
मेणांकांबुजभासुरास्यनयनां
श्रीभद्रकालीं भजे ।। (६)

कालांभोदकलायकोमलतनु
च्छायाशितीभूतिमत्-
संख्यानान्तरितस्तनान्तरलस-
न्मालाकिलन्मौक्तिकां
नाभीकूपसरोजनालविलस-
च्छातोदरीशापदीम्
दूरीकुर्वयि देवि, घोर दुरितं (७)
श्रीभद्रकालीं भजे ।।

आत्मीयस्तनकुंभकुङ्कुमरजः
पङ्कारुणालकृत-
श्रीकण्ठौरसभूरिभूतिममरी-
कोटीरहीरायिताम्
वीणापाणिसनन्दनन्दितपदा-
मेणीविशालेक्षणां
वेणीह्रीणितकालमेघपटलीं
श्रीभद्रकालीं भजे ॥ (८)

## फलश्रुतिः

देवीपादपयोजपूजनमिति
श्रीभद्रकाल्यष्टकं
रोगौघाघघनानिलायितमिदं
प्रातःप्रगेयं पठन्
श्रेयःश्रीशिवकीर्तिसंपदमलं
संप्राप्य संपन्मयीं
श्रीदेवीमनपायिनीं गतिमयन्
सोऽयं सुखी वर्तते ॥

## 6. चिदम्बराष्टकम्

ब्रह्ममुखामरवन्दितलिङ्गं
जन्मजरामरणान्तकलिङ्गम्
कर्मनिवारणकौशललिङ्गं
तन्मृदु पातु चिदम्बरलिङ्गम् ।। (१)

कल्पकमूलप्रतिष्ठितलिङ्गं
दर्पकनाशयुधिष्ठिरलिङ्गम्
कुप्रकृतिप्रकरान्तकलिङ्गं
तन्मृदु पातु चिदम्बरलिङ्गम् ।। (२)

स्कन्दगणेश्वरकल्पितलिङ्गं
किन्नरचारणगायकलिङ्गम्
पन्नगभूषणपावनलिङ्गं
तन्मृदु पातु चिदम्बरलिङ्गम् ।। (३)

सांबसदाशिवशङ्करलिङ्गं
काम्यवरप्रदकोमललिङ्गम्
साम्यविहीनसुमानसलिङ्गं
तन्मृदु पातु चिदम्बरलिङ्गम् ।। (४)

कलिमलकाननपावकलिङ्गं
सलिलतरंगविभूषणलिङ्गम्
पलितपतंगप्रदीपकलिङ्गं
तन्मृदु पातु चिदम्बरलिङ्गम् ॥ (५)

अष्टतनुप्रतिभासुरलिङ्गं
विष्टपनाथविकस्वरलिङ्गम्
शिष्टजनावनशीलितलिङ्गं
तन्मृदु पातु चिदम्बरलिङ्गम् ॥ (६)

अन्तकमर्द्दनबन्धुरलिङ्गं
कृन्तितकामकलेबरलिङ्गम्
जन्तुहृदिस्थितजीवकलिङ्गं
तन्मृदु पातु चिदम्बरलिङ्गम् ॥ (७)

पुष्टधियस्सुचिदम्बरलिङ्गं
दृष्टमिदं मनसानुपठन्ति
अष्टकमेतदवाङ्मनसीयं
अष्टतनुं प्रति यान्ति नरास्ते ॥ (८)

---

## 7. षाण्मातुरस्तवम्

गौरीसहायसुहृद्दूरीकृतावयव-
भूरीषु वैरिषु तम-
स्सूरीकृतायुधनिवारीतदोष निज-
नारीकलालसमनः
क्रूरीभवत्तिमिरचारी हितापदुरि-
नी नीतिसूरी करुणा-
वारीणवारिधर गौरीकिशोर मम
दूरीकुरुष्व दुरितम् ॥ (१)

मल्लीकृतत्रिदशमल्लीसदा सुदति
वल्लीकुचाङ्कणलसत्
सल्लीनकुंकुमरसोल्लीनवत्स युधि
भल्लीस्मयोसि दितिजैः
स्फुल्लीकुरुष्व स च वल्लीतगोथितल-
वल्लीविलोलबुधहृद्-
वल्लीनिवास मम सोल्लीनकेकि हय-
सल्लीलपाहृदुदजम् ॥ (२)

प्राणीकृतस्वनखराणीतभक्तजन-
वाणीशमुख्यसुमन-
श्श्रेणीसुजानुतलतूणीतमालतिमि-
राणीलचूचुकभरा
वाणीविलासमळिवेणीविपञ्चिमृदु-
वाणी तवांगरमणी
श्रोणीघना सुमति शाणीतनोतु भृश-
मेणीविशालनयना । (३)

रागाभिषिक्तनिजकेशादिपादवपु-
राशापिशाचदहना
श्रीशातकुंभनिभपाशाङ्कुशाभरण-
नाशान्तकानुचर ! भोः
भीशाड्वलाहरणगोशाबकावनत-
कोशाधिपाशु भगवन्
पाशाटवी भव हृताशाशयावपिशि-
ताशा हि भोगभुगमुम् । (४)

सन्तापसन्ततिनिशान्तावसन्तमयि
कान्तायुगान्तररते
किन्तावके हृदि नितान्ताकुलाशयम-
हन्तानपेतमवितुम्

किन्तामसं भवति चिन्तामणीरुचिर-
सन्तानपादपदव-
श्चिन्ताधुतान्तरुजमन्तादिहीन कुरु
मान्तावकीनभजनम् । (५)

सीमाविहीनगुणसोमावचूडजित-
कामाभिमानसुमते !
भूमाधवादिनुतभूमासमानपुर-
कामान्धकान्तकगुरो
नामाळिजापिजनकामावसानफल-
दाभाशमातनु विभो
हेमारुणाहितनिकामातिभीम गुह
सामादिवेद्यविदयम् । (६)

वेदानुगीतनुतपादारविन्दयुग-
मादाय सेवनविधे-
रादावमुं सरसमादातुकाम शुभ-
केदारकेळिनिलये
तादात्म्यलीनमतिसादावनोदसक-
लादानदैवततरो
भूदासकल्पलतिकोदारदाम कुरु
मोदांबुराशिवसतिम् । (७)

किञ्चासुरद्विरदपञ्चाननप्रणव-
सञ्चारिहंससदने
किञ्चापलन्नमन तुञ्चानुजीवि मम
सिञ्चामृताभ कृपया
पञ्चाननप्रणय कञ्चापि शासिकति
मुञ्चाशु वद्धकमतिम्
पञ्जाशुगारिसुरपञ्चाननात्मज-
मिमञ्चापि पाहि सततम् । (८)

कालाय शीतरुचिवालावचूड शुभ-
शीलावधूतदुरित
श्रीलाधमीवरद लीलाहिवारिसख
बालाशयाशयशुचे !
कालानलोपमित फालावलोकनक

x x x

वेलायुधो मह्नि कोलाहलारवमु-
लील्ला तनोतु कुशलम् ।

---

# विष्णवष्टकम्

विष्णुं विशालारुणपद्मनेत्रं
विभान्तमीशाम्बुजयोनिपूजितम् ।
सनातनं सन्मतिशोधितं परं
पुमांसमाद्यं सततं प्रपद्ये ॥ (१)

कल्याणदं कामफलप्रदायक
कारुण्यरूपं कलिकल्मषघ्नम् ।
कलानिधिं कामतनूजमाद्यं
नमामि लक्ष्मीशमहं महान्तम् ॥ (२)

पीताम्बरं भृङ्गनिभं पितामह-
प्रमुख्यवन्द्यं जगदादिदेवम् ।
किरीटकेयूरमुखैः प्रशोभितं
श्रीकेशवं सन्ततमानतोऽस्मि ॥ (३)

भुजङ्गतल्पं भुवनैकनाथं
पुनः पुनः स्वीकृतकायमाद्यम् ।
पुरन्दराद्यैरपि वन्दितं सदा
मुकुन्दमत्यन्तमनोहरं भजे ॥ (४)

क्षीराम्बुराशेरभितः स्फुरन्तं
शयानमाद्यन्तविहीनमव्ययम् ।
सत्सेवितं सारसनाभमुच्चैः
विघोषितं केशिनिषूदनं भजे ॥ (५)

भक्तार्त्तिहन्तारमहर्निशन्तं
मुनीन्द्रपुष्पाञ्जलिपादपङ्कजम् ।
भवघ्नमाधारमहाश्रयं परं
परापरं पङ्कजलोचनं भजे ॥ (६)

नारायणं दानवकाननानलं
नतप्रियं नामविहीनमव्ययम् ।
हर्त्तुं भुवो भारमनन्तविग्रहं
स्वस्वीकृतक्ष्मावरमीडितोऽस्मि ॥ (७)

नमोऽस्तु ते नाथ ! वरप्रदायिन् !
नमोऽस्तु ते केशव ! किङ्करोऽस्मि ।
नमोऽस्तु ते नारदपूजिताङ्घ्रे
नमो नमस्त्वच्चरणं प्रपद्ये ॥ (८)

फ़लश्रुतिः

विष्णवष्टकमिदं पुण्यं यः पठेद्भक्तितो नरः ।
सर्व्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥

# ब्रह्मविद्यापञ्चकम्

नित्यानित्यविवेकतो हि नितरां
निर्वेदमापद्य सद्-
विद्वानत्र शमादिषट्कलसितः
स्यान्मुक्तिकामो भुवि;
पश्चाद् ब्रह्मविदुत्तमं प्रणतिसे-
वाद्यैः प्रसन्नं गुरुं
पृच्छेत् कोऽहमिदं कुतो जगदिति
स्वामिन्! वद त्वं प्रभो! (१)

त्वं हि ब्रह्म न चेन्द्रियाणि न मनो
बुद्धिर्न चित्तं वपुः
प्राणाहङ्कृतयोऽन्यदप्यसदवि-
द्याकल्पितं स्वात्मनि
सर्वं दृश्यतया जडं जगदिदं
त्वत्त्वः परं नान्यतो
जातं न स्वत एव भाति मृगतृ-
ष्णाभं दरीदृश्यतां। (२)

व्याप्तं येन चराचरं घटशरा-
वादीव मृत्सत्तया
यस्यान्तःस्फुरितं यदात्मकमिदं
जातं यतो वर्त्तते;

यस्मिन् यत् प्रळयेऽपि सद्घनमजं
सर्वं यदन्वेति तत्
सत्यं विद्ध्यमृताय निर्मलधियो
यस्मै नमस्कुर्वते । (३)

सृष्ट्वेदं प्रकृतेरनुप्रविशती
येयं यया धार्यते
प्राणीती प्रविविक्तभुग्बहिरहम्
प्राज्ञस्सुषुप्तौ यतः
यस्यामात्मकला स्फुरत्यहमिति
प्रत्यन्तरङ्गं जनैर-
यस्यै स्वस्ति समर्थ्यते प्रतिपदा-
पूर्णं श्रृणु त्वं हि सा । (४)

प्रज्ञानं त्वहमस्मि तत्वमसि तद्
ब्रह्मायमात्मेति सं-
गायन् विप्रचर प्रशान्तमनसा
त्वं ब्रह्मबोधोदयात्
प्रारब्धं क्व नु सञ्जितं तव किमा-
गामि क्व कर्माप्यसत्
त्वय्यद्ध्यस्तमतोऽखिलं त्वमसि स-
च्चिन्मात्रमेकं विभुः । (५)

---

# मुनिचर्यापञ्चकम्

भुजः किमुपधानतां किमु न कुंभिनी मञ्चतां
व्रजेद् व्रजिनहारिणी स्वपदपातिनी मेदिनी ।
मुनेरपरसंपदा किमिह मुक्तरागस्य त-
त्वमस्यधिगमादयं सकलभोग्यमत्यश्नुते ॥ (१)

मुनिः प्रवदतां वरः क्वचन वाग्यमी पण्डितो
विमूढ इव पर्यटन् क्वचन संस्थितोऽप्युत्थितः ।
शरीरमधिगम्य चञ्चलमनेहसा खण्डितम्
भजत्यनिशमात्मनः पदमखण्डबोधं परम् ॥ (२)

अयाचितमलिप्सया नियतिदत्तमन्नं मुनि-
स्तनोः स्थितय इत्यदन् पथि शयानकोऽव्याकुलः ।
सदात्मदृगनश्वरं स्वपरमात्मनोरैक्यतः
स्फुरन् निरुपम् पदं निजमुपैति सच्चित्सुखम् ॥ (३)

असत्सदिति वादतो बहिरचिन्त्यमग्राह्यम-
णवखर्वममलं परं स्तिमितनिम्नमत्युन्नतम् ।
पराङ्मुख इतस्ततः परिसमेति तुर्यं पदम्
मुनिस्सदसतोरद्वयादुपरिगन्तुमभ्युद्यतः ॥ (४)

स्ववेश्मनि वने तथा पुलिनभूमिषु प्रान्तरे
क्व वा वसतु योगिनो वसति मानसं ब्रह्मणि ।
इदं मरुमरीचिकासदृशमात्मदृष्ट्याखिलम्
निरीक्ष्य रमते मुनिर्निरुपमे परब्रह्मणि ॥ (५)

---

## जातिनिर्णयम्

मनुष्याणां मनुष्यत्वम्
जातिर्गोत्वं गवां यथा ।
न ब्राह्मणादिरस्यैवम्
हा ! तत्वं वेत्ति कोऽपि न ॥

## धर्मः

धर्मं एव परं दैवं
धर्मं एव महाधनम्
धर्मंसर्वत्र विजयी
भवतु श्रेयसे नृणां ।

---

# आश्रमम्

आश्रमेऽस्मिन् गुरुः कश्चि-
द्विद्वान् मुनिरुदारधीः ।
समदृष्टिः शान्तगम्भी-
राशयो विजितेन्द्रियः ॥ (१)

परोपकारी स्याद्दीन-
दयालुः सत्यवाक्पटुः ।
सदाचाररतः शीघ्र-
कर्तव्यकृदतन्द्रितः ॥ (२)

अधिष्ठायास्य नेतृत्वं
कुर्यात् काञ्चित् सभां शुभां; ।
अस्यामायान्ति ये ते स्युः
सर्वे सोदरबुद्धयः ॥ (३)

यद्वदत्रैव तद्वच्च
स्त्रीणां पुंसां पृथक् पृथक् ।
विद्यालया दिशि दिशि
क्रियन्तामाश्रमाः सभाः ॥ (४)

एकैकस्यामासु नेता
चैकैकः स्याद्विचक्षणः ।
सर्वाभिरनुबन्धोऽद्वै-
ताश्रमस्याभिरन्वहम् ॥ (५)

---

# निर्वृतिपञ्चकम्

को नाम देशः का जातिः
प्रवृत्तिः का कियद्वयः ।
इत्यादिवादोपरति-
र्यस्य तस्यैव निर्वृतिः ॥ (१)

आगच्छ गच्छ मा गच्छ
प्रविश क्व नु गच्छसि ।
इत्यादिवादोपरति-
र्यस्य तस्यैव निर्वृतिः ॥ (२)

क्व यास्यसि कदायातः
कुत आयासि कोऽसि वै ।
इत्यादिवादोपरति-
र्यस्य तस्यैव निर्वृतिः ॥ (३)

अहं त्वं सोऽयमन्तर्हि
बहिरस्ति न वास्ति वा ।
इत्यादिवादोपरति-
र्यस्य तस्यैव निर्वृतिः ॥ (४)

ज्ञाताज्ञातसमः स्वान्य-
भेदशून्यः कुतो भिदा ।
इत्यादिवादोपरति-
र्यस्य तस्यैव निर्वृतिः ॥ (५)

---

# श्लोकत्रयी

अस्ति धर्मीत्यनुमितिः
कथं भवति वागपि ?
असन्निकृष्टत्वादस्मिन्
प्रत्यक्षमनुमानवत् ॥ (१)

न विद्यतेस्ति धर्मीति
प्रत्यक्षमनुमानवत् ।
मानाभावादसौ नेति
बोध एवावशिष्यते ॥ (२)

असन्निकृष्टत्वादस्य
प्रत्यक्षं धर्मधर्मिणोः ।
असृष्टसाहचर्याच्च
धर्मिण्यनुमितिः कुतः ? (३)

---

# दर्शनमाला

## 1. अध्यारोपदर्शनम्

आसीदग्रेऽसदेवेदं
भुवनं स्वप्नवत् पुनः ।
ससर्ज सर्वं सङ्कल्प-
मात्रेण परमेश्वरः ॥ (१)

वासनामयमेवादा-
वासीदिदमथ प्रभुः ।
असृजन्मायया स्वस्य
मायावीवाखिलं जगत् ॥ (२)

प्रागुत्पत्तेरिदं स्वस्मिन्
विलीनमथ वै स्वतः ।
बीजादङ्कुरवत्स्वस्य
शक्तिरेवासृजत्स्वयं ॥ (३)

शक्तिस्तु द्विविधा ज्ञेया
तैजसी तामसीति च ।
सहवासोऽनयोर्नास्ति
तेजस्तिमिरयोरिव ॥ (४)

मनोमात्रमिदं चित्र-
मिवाग्रे सर्वमीदृशम् ।
प्रापयामास वैचित्र्यम्
भगवांश्चित्रकारवत् ॥ (५)

आसीत् प्रकृतिरेवेदम्
यथाऽद्गौ योगवैभवः ।
व्यतनोदथ योगीव
सिद्धिजातं जगत्पतिः ॥ (६)

यदाऽऽत्मविद्यासंकोच-
स्तदाऽविद्या भयङ्करम् ।
नानारूपात्मनाऽत्यर्थं
विभातीह पिशाचवत् ॥ (७)

भयङ्करमिदं शून्यम्
वेताळनगरं यथा ।
तथैव विश्वमखिलं
व्यकरोदद्भुतं विभुः ॥ (८)

अर्काद्यथाक्रमं विश्वं
तथा नैवेदमात्मनः ।
सुप्तेरिव प्रादुरासी-
द्युगपत्स्वस्य वीक्षया ॥ (९)

धानादिव वटो यस्मात्
प्रादुरासीदिदम् जगत् ।
स ब्रह्मा स शिवो विष्णुः
स परः सर्व एव सः ॥ (१०)

---

## 2. अपवाददर्शनम्

चैतन्यादागतं स्थूल-
सूक्ष्मात्मकमिदं जगत् ।
अस्ति चेत्सद्घनं सर्वम्
नास्ति चेदस्ति चिद्घनम् ॥ (१)

अन्यन्न कारणात् कार्य-
मसदेतदतोऽखिलम् ।
असतः कथमुत्पत्ति-
रनुत्पन्नस्य को लयः ? (२)

यस्योत्पत्तिर्लयो नास्ति
तत् परं ब्रह्म नेतरत् ।
उत्पत्तिश्च लयोऽस्तीति
भ्रमत्यात्मनि मायया ॥ (३)

कारणाव्यतिरिक्तत्वात्
कार्यस्य कथमस्तिता ?
भवत्यतः कारणस्य
कथमस्ति च नास्तिता ? (४)

कार्यत्वादसतोऽस्यास्ति
कारणं न ह्यतो जगत् ।
ब्रह्मैव तर्हि सदस-
दिति मुह्यति मन्दधीः ॥ (५)

एकस्यैवास्ति सत्ता चे-
दन्यस्यासौ क्व विद्यते ?
सत्यस्त्यात्माश्रयो यद्य-
प्यसति स्यादसंभवः ॥ (६)

विभज्यावयवं सर्व-
मेकैकं तत्र दृश्यते ।
चिन्मात्रमखिलं नान्य-
दिति मायाविदूरगम् ॥ (७)

चिदेव नान्यदाभाति
चितः परमतो न हि ।
यच्च नाभाति तदस-
द्यदसत्तन्न भाति च ॥ (८)

आनन्द एवास्ति भाति
नान्यः कश्चिदतोऽखिलम् ।
आनन्दघनमन्यन्न
विनाऽऽनन्देन विद्यते ॥ (९)

सर्वं हि सच्चिदानन्दम्
नेह नानाऽस्ति किञ्चन ।
यः पश्यतीह नानेव
मृत्योर्मृत्युं स गच्छति ॥ (१०)

## ३. असत्यदर्शनम्

मनोमयमिदं सर्वं
न मनः क्वापि विद्यते ।
अतो व्योम्नीव नीलादि
दृश्यते जगदात्मनि ॥ (१)

मनसोऽनन्यया सर्वं
कल्प्यतेऽविद्यया जगत् ।
विद्ययाऽसौ लयं याति
तदालेख्यमिवाखिलम् ॥ (२)

विजृंभते यत्तमसो-
भीरोरिह पिशाचवत् ।
तदिदं जाग्रति स्वप्न-
लोकवद् दृश्यते बुधैः ॥ (३)

सङ्कल्पकल्पितं दृश्यं
सङ्कल्पो यत्र विद्यते ।
दृश्यं तत्र च नान्यत्र
कत्रचिद्रज्जुसर्पवत् ॥ (४)

सङ्कल्पमनसोः कश्चि-
न्न हि भेदोऽस्ति यन्मनः
तदविद्यातमः प्रख्य-
मिन्द्रजालमिवाद्भुतम् ॥ (५)

मरीचिकावत् प्राज्ञस्य
जगदात्मनि भासते ।
बालस्य सत्यमिति च
प्रतिबिम्बमिव भ्रमात् ॥ (६)

आत्मा न क्षीरवद्याति
रूपान्तरमतोऽखिलम् ।
विवर्त्तमिन्द्रजालेन
विद्यते निर्मितं यथा ॥ (७)

मायैव जगतामादि-
कारणं निर्मितं तया ।
सर्वं हि मायिनो नान्य-
दसत्यं सिद्धिजालवत् ॥ (८)

विभाति विश्वं वृद्धस्य
वियद्वनमिवात्मनि ।
असत्यं पुत्रिकारूपं
वालस्येव विपर्यः ॥ (९)

एकं सत्यं न द्वितीयं
ह्यसत्यं भाति सत्यवत् ।
शिलैव शिवलिङ्गं न
द्वितीयं शिल्पिना कृतम् ॥ (१०)

---

## 4. मायादर्शनम्

न विद्यते या सा माया
विद्याऽविद्या पराऽपरा ।
तमः प्रधानं प्रकृति-
र्बहुधा सैव भासते ।। (१)

प्रागुत्पत्तेर्यथाऽभावो
मृदेव ब्रह्मणः पृथक् ।
न विद्यते ब्रह्म हि या
सा मायाऽमेयवैभवा ।। (२)

अनात्मा न सदात्मा स-
दिति विद्योतते यया ।
सा विद्येयं यथा रज्जु-
सर्पतत्त्वावधारणम् ।। (३)

आत्मा न सदनात्मा स-
दिति विद्योतते यया ।
सैवाविद्या यथा रज्जु-
सर्पयोरयथार्थदृक् ।। (४)

इन्द्रियाणि मनोबुद्धी
पञ्च प्राणादयो यया ।
विसृज्यन्ते सैव परा
सूक्ष्माङ्गानि चिदात्मनः ।। (५)

अङ्गान्येतान्यवष्टभ्य
सुखी दुःखीव मुह्यति।
चिदात्मा मायया स्वस्य
तत्वतोऽस्ति न किञ्चन ॥ (६)

इन्द्रियाणां हि विषयः
प्रपञ्चोऽयं विसृज्यते।
यया सैवाऽपराऽध्यात्म-
स्थूलसङ्कल्पनामयी ॥ (७)

शुक्तिकायां यथाऽज्ञानं
रजतस्य यदात्मनि।
कल्पितस्य निदानं त-
त्तम इत्यवगम्यते ॥ (८)

धीयतेऽस्मिन् प्रकर्षेण
बीजे वृक्ष इवाखिलम्।
अतः प्राधान्यतो वाऽस्य
प्रधानमिति कथ्यते ॥ (९)

करोतीति प्रकर्षेण
प्रकृत्यैव गुणान् पृथक्।
निगद्यतेऽसौ प्रकृति-
रिति ह त्रिगुणात्मिका ॥ (१०)

---

## 5. भानदर्शनम्

अन्तर्बहिर्वदासीनं
सदा भ्रमरचञ्चलम् ।
भानं द्विदैव सामान्यं
विशेष इति भिद्यते ॥ (१)

स्थूलं सूक्ष्मं कारणं च
तुर्यं चेति चतुर्विधम् ।
भानाश्रयं हि तन्नाम
भानस्याप्युपचर्यते ॥ (२)

दृश्यतामिह कायोऽहं
घटोऽयमिति दृश्यते ।
स्थूलमाश्रित्य यद् भानं
स्थूलं तदिति मन्यते ॥ (३)

अत्र कायो घट इति
भानं यत्तद्विशिष्यते ।
तथाऽहमयमिति यत्
सामान्यमिति च स्मृतम् ॥ (४)

इन्द्रियाणि मनोबुद्धी
विषया पञ्च वायवः ।
भास्यन्ते येन तत्सूक्ष्म-
मस्य सूक्ष्माश्रयत्वतः ॥ (५)

अज्ञोऽहमिति यद्भानं
तत्कारणमुदाहृतं।
अत्राहमिति सामान्यं
विशेषोऽज्ञ इति स्फुरत् ॥ (६)

अहं ब्रह्मेति यद्भानं
तत्तुर्यमिति शंस्यते।
सामान्यमहमित्यंशो
ब्रह्मेत्यत्र विशिष्यते॥ (७)

यत्र भानं तत्र भास्यं
भानं यत्र न तत्र न।
भास्यमित्यन्वयेनापि
व्यतिरेकेण बोध्यते ॥ (८)

यथा दृग्दृशमात्मानं
स्वयमात्मा न पश्यति।
अतो न भास्यते ह्यात्मा
यं पश्यति स भास्यते ॥ (९)

यद्भास्यते तदध्यस्त-
मनध्यस्तं न भास्यते।
यदध्यस्तं तदसद-
प्यनध्यस्तं सदेव तत् ॥ (१०)

## 6. कर्मदर्शनम्

आत्मैव मायया कर्म
करोति बहुरूपधृक् ।
असङ्गः स्वप्रकाशोऽपि
निद्रायामिव तैजसः ॥ (१)

मन्ये वदामि गृह्णामि
शृणोमीत्यादिरूपतः ।
क्रियते कर्म्म परमा-
त्मना चित्तेन्द्रियात्मना ॥ (२)

आत्मैव कर्मणः पूर्व-
मन्यत् किञ्चिन्न विद्यते ।
ततः स्वेनैव कर्माणि
क्रियन्ते निजमायया ॥ (३)

शक्तिरस्त्यात्मनः काचि-
द्दुर्घटा न पृथक् स्वतः ।
तयैवारोप्यते कर्म
निखिलं निष्क्रियात्मनि ॥ (४)

सर्वदाऽसङ्ग एवात्मा-
ऽज्ञतया कर्म सङ्गीवत् ।
करोति न करोमीति
न ज्ञः कर्मसु सज्जते ॥ (५)

ज्वलति ज्वलनो वायु-
र्वाति वर्षति वारिदः ।
धरात्मा सन् धरति ख-
ल्वेको वहति वाहिनी ॥ (६)

ऊर्द्धं प्राणो ह्यधोऽपानः
खल्वेको याति निष्क्रियः ।
नाड्यन्तराळे धमति
क्रन्दति स्पन्दति स्थितः ॥ (७)

अस्ति जन्मर्द्धिपरिण-
त्यपक्षयविनाशनम् ।
षड्भावमिह यो याति
स नान्योऽविक्रियात्मनः ॥ (८)

स्वयं क्रियन्ते कर्माणि
करणैरिद्रियैरपि ।
अहं त्वसङ्गः कूटस्थ
इति जानाति कोविदः ॥ (९)

दृश्यत्वाद् भास्यमहम-
प्यतोऽहं शुक्तिरङ्गवत् ।
अद्ध्यस्तमेक एवाद्य
श्वोऽपि सर्वोपरि स्थितः ॥ (१०)

---

## 7. ज्ञानदर्शनम्

ज्ञानमेकं हि निरुपा-
धिकं सोपाधिकं च तत् ।
अहङ्कारादिहीनं यज्-
ज्ञानं तन्निरुपाधिकम् ॥ (१)

अहन्तयाऽन्तर्बहिर-
स्ति यदेवमिदन्तया ।
भानवृत्त्याऽन्वितं यत्तु
ज्ञानं सोपाधिकं मतम् ॥ (२)

अनात्मनामहङ्कारा-
दीनां येनानुभूयते ।
साक्षी तदात्मज्ञानं स्या-
द्येनैवामृतमश्यते ॥ (३)

अहङ्कारादिकार्यं य-
दनात्मकमसंख्यकम्
येनावगम्यतेऽनात्म-
ज्ञानं तदवधार्यते ॥ (४)

यथावद्वस्तुविज्ञानं
रज्जुतत्त्वावबोधवत् ।
यत्तद्यथार्त्थविज्ञान-
मयथार्त्थमतोऽन्यथा ॥ (१०)

यत्सान्निद्ध्यादेव सर्वं
भासते स्वयमेव तत् ।
प्रत्यक्षज्ञानमिति चा-
परोक्षमिति लक्ष्यते ॥ (६)

ययानुऽसाधकं साध्यं
मीयते ज्ञानरूपया ।
वृत्त्या सऽनुमितिः साह-
चर्यसंस्कारजन्या ॥ (७)

गत्वा समीपं मेयस्य
मीयते श्रुतलक्षणः ।
यया संवित् सोपमिति-
र्मृगोऽयमिति रूपया ॥ (८)

अहं ममेति ज्ञानं य-
दिदं तदिति यच्च तत् ।
जीवज्ञानं तदपर-
मिन्द्रियज्ञानमिष्यते ॥ (९)

ओंतत् सदिति निर्दिष्टं
ब्रह्मात्मैक्यमुपागतम् ।
कल्पनादिविहीनं य-
त्तत् परज्ञानमीर्यते ॥ (१०)

## ४. भक्तिदर्शनम्

भक्तिरात्मानुसन्धान-
मात्माऽऽनन्दघनो यतः ।
आत्मानमनुसन्धत्ते
सदैवात्मविदात्मना ॥ (१)

अनुसन्धीयते ब्रह्म
ब्रह्मानन्दघनं यतः ।
सदा ब्रह्मानुसन्धानं
भक्तिरित्यवगम्यते ॥ (२)

आनन्दमेव ध्यायन्ति
सर्वे दुःखं न कश्चन ।
यदानन्दपरं ध्यानं
भक्तिरित्युपदिश्यते ॥ (३)

आत्मैव ब्रह्म भजति
नान्यमात्मानमात्मवित् ।
भजतीति यदात्मानं
भक्तिरित्यभिधीयते ॥ (४)

आनन्द आत्मा ब्रह्मेति
नामैतस्यैव तन्यते ।
इति निश्चितधीर्यस्य
स भक्त इति विश्रुतः ॥ (५)

आनन्दोऽहमहं ब्रह्मा-
त्माऽहमस्मीति रूपतः ।
भावना सततं यस्य
स भक्त इति विश्रुतः ॥ (६)

भार्या भजति भर्त्तारं
भर्त्ता भार्यां न केवलं ।
स्वानन्दमेव भजति
सर्वोऽपि विषयस्थितम् ॥ (७)

एवं पश्यति कुत्रापि
विद्वानात्मसुखं विना ।
न किञ्चिदपरं तस्य
भक्तिरेव गरीयसी ॥ (८)

लोकस्य पितरि स्वस्य
गुरौ पितरि मातरि ।
सत्यस्य स्थापितरि च
तत्पथेनैव यातरि ॥ (९)

नियन्तरि निषिद्धस्य
सर्वेषां हितकर्त्तरि ।
योऽनुरागो भक्तिरत्र
सा परा परमात्मनि ॥ (१०)

# ९. योगदर्शनम्

सततं योजयति य-
द्युनक्ति च चिदात्मनि ।
मनोनिरोधरूपोऽयं
स योग इति शंसितः ॥ (१)

न द्रष्टा दर्शनं दृश्यं
विद्यते यत्र तत्र हृत् ।
योजयेद्वासना याव-
द्योगोऽयमिति योगवित् । (२)

नामरूपमिदं सर्वं
ब्रह्मैवेति विलीयते ।
यद्ब्रह्मणि मनो नित्यं
स योग इति निश्चितः ॥ (३)

चित्तस्य तैलधाराव-
द्वृत्याऽविच्छिन्नयाऽऽत्मनि ।
निरन्तरं रम्यते यत्
स योगो योगिभिः स्मृतः ॥ (४)

यतो यतो मनो याति
सदाऽऽत्मनि ततस्ततः ।
नियम्य योजयेदेत-
द्योगोऽयं युज्यतामिह ॥ (५)

सर्वानर्थकरः पुंसां
सङ्कल्पः कल्पितैः सह ।
उन्मूल्य वासनाजालै-
र्येनात्मनि निरुध्यते ॥ (६)

दृश्यस्य न दृशोऽस्तित्व-
मतो दृश्यं दृगात्मकं ।
इतिज्जीत दृग्रूपे
यः स योगविदां वरः ॥ (७)

यदा पिबन् मनोभृङ्गः
स्वानन्दमधुमाधुरीं ।
न स्पन्दति वशीकृत्य
योजितो योगवायुना ॥ (८)

ध्यानमन्तर्भ्रूवोर्दृष्टि-
र्जिह्वाग्रं लंबिकोर्ध्वतः ।
यदा स्यात् खेचरीमुद्रा
निद्रालस्यादिनाशिनी ॥ (९)

ज्ञानं कर्मेति लोकेऽस्मिन्
द्विधा योगः समासतः ।
अनयोर्योगविस्तारः
सर्वः परिसमाप्यते ॥ (१०)

---

## 10. निर्वाणदर्शनम्

निर्वाणं द्विविधं शुद्ध-
मशुद्धं चेति तत्र यत् ।
शुद्धं निर्वासनं तद्व-
दशुद्धं वासनान्वितम् ॥ (१)

अतिशुद्धं शुद्धमिति
शुद्धं च द्विविधं तथा।
अशुद्धशुद्धं चाशुद्ध-
मशुद्धाशुद्धमुच्यते ॥ (२)

अतिशुद्धं त्रिधा पश्चा-
द्वरे चैकं वरीयसि ।
एकमेकं वरिष्ठेऽथ
शुद्धं ब्रह्मविदि स्थितम् ॥ (३)

अशुद्धशुद्धं विरज-
स्तमोऽन्यत् सरजस्तमः ।
मुमुक्षौ प्रथमं विद्याद्
द्वितीयं सिद्धिकामिषु ॥ (४)

दग्ध्वा ज्ञानाग्निना सर्व-
मुद्दिश्य जगतां हितं ।
करोति विधिवत् कर्म्म-
ब्रह्मविद् ब्रह्मणि स्थितः ॥ (५)

संन्यस्य सर्वकर्माणि
सततं ब्रह्मनिष्ठया ।
यश्चरत्यवनौ देह-
यात्रायै ब्रह्मविद्वरः ॥ (६)

अन्येन वेदितो वेत्ति
न वेत्ति स्वयमेव यः ।
स वरीयान् सदा ब्रह्म-
निर्वाणमयमश्नुते ॥ (७)

स्वयं न वेत्ति किञ्चिन्न
वेदितोऽपि तथैव यः ।
स वरिष्ठः सदा वृत्ति-
शून्योऽयं ब्रह्म केवलम् ॥ (८)

हेयोपादेयता न ह्य-
स्यात्मा या स्वप्रकाशकः ।
इति मत्वा निवर्त्तेत
वृत्तिर्नावर्त्तते पुनः । (९)

एकमेवाद्वितीयं ब्र-
ह्मास्ति नान्यत्र संशयः ।
इति विद्वान् निवर्त्तेत
द्वैतान्नावर्त्तते पुनः ॥ (१०)

ओं तत् सत्

---

# होममन्त्रः

ओं अग्ने तव यत्तेजस्तद्ब्राह्मं
अतस्त्वं प्रत्यक्षं ब्रह्मासि
त्वदीया इन्द्रियाणि मनोबुद्धिरिति सप्तजिह्वाः
त्वयि विषया इति समिधो जुहोमि
अहमित्याज्यं जुहोमि
त्वं नः प्रसीद प्रसीद
श्रेयश्च प्रेयश्च प्रयच्छ स्वाहा ।

ओं शान्तिः शान्तिः शान्तिः

---

## समाधि श्लोकौ

सर्वज्ञ ऋषिरुत्क्रान्तः
सद्गुरुः शुकवर्त्मना
आभाति परमव्योम्नि
परिपूर्णकलानिधिः ।

लीलया कालमधिकम्
नीत्वाऽन्ते स महाप्रभुः
निस्स्वं वपुः समुत्सृज्य
स्वं ब्रह्मवपुरास्थितः ।



## नवमञ्जरिकाया अवतरणिका

शिशुनामगुरोराज्ञां
करोमि शिरसावहन्
नवमञ्जरिकां शुद्धी-
कर्तुमर्हन्ति कोविदाः ।

---

# वेदान्तसूत्रम्

"अथ यदात्मनो जिज्ञासुस्तदिदं
ब्रह्मैवाहम् । (१)

किं तस्य लक्षणमस्य च कति
गणनयेति । (२)

तत्ज्योतिः । (३)

तेनेदं प्रज्वलितम् । (४)

तदिदं सदसदिति । (५)

भूयो सतस्सदसदिति । (६)

सच्छब्दादयोसदभावश्चेति । (७)

पूर्वं सदिदमनुसृत्य चक्षुरा-
दयश्चैकं चेति । (८)

ज्ञातृज्ञानयोरन्योन्यविषय-
विषयित्वान्मिथुनत्वमिति । (९)

एवं ज्ञानज्ञेयविभागे । (१०)

एकैकं रुद्रत्वमासीदिति । (११)

ब्रह्मैवाहं तदिदं ब्रह्मैवाहमस्मि । (१२)

अतीतागामिनोरसत्वं यतः यदेतदन्विच्छत । (१३)

परिमाणं ततः । (१४)

सदसतोरन्योन्यकार्यकारणत्वात् । (१५)

अहं ममेति विज्ञातः । (१६)

मत्तो नान्यस्तद्वत् तस्मात् । (१७)

दृग्दृश्ययोः समानकालीनत्वात् । (१८)

सुखैकत्वात् । (१९)

व्यापकतया दिशामस्तित्वात् । (२०)

अणुमहदवयवतारतम्यस्याभावात् (२१)

असतोऽव्यापकत्वात् । (२२)

आत्मान्यत्किञ्चिन्नास्ति । (२३)

तस्मात् तस्य सत्वाच्च ।" (२४)

---